मनोद्रुतिमयी प्रीतिर्म्मैत्री स्पर्शादिकोचिता ।
निर्व्विकारा सदैकाभा सा सौहार्द्दमितीष्यते ॥(च)॥६७का

सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्द्दम्—सा च स्त्रीसखीनां पतिसखीनाञ्च परस्परविषया ।

स्पर्शकर्म्मसमुचिता भवति, स्त्रीणां परस्परयथेष्टस्पर्शादिव्यवहारे दोषो नास्ति—एवं पुरुषाणामपि ज्ञेयम् । प्रीतिसौहार्द्दाभ्यामेतादृशविशेषो मैत्र्यां ज्ञेयः—तत्र तत्र स्त्रीपुरुष-सङ्केत स्वच्छन्दस्पर्शानौचित्यात् स्त्रीसखीनां स्त्रीणां पतिसखीनां पुरुषाणाञ्च परस्पर-विषया । निर्व्विकारेति—स्त्रीपुरुषयोः परस्परदर्शनेऽपि विकाररहितेत्यर्थः ।

ननु श्रीकृष्णस्य देवोत्तमत्वेन सर्व्वव्यापकत्वादिरूपत्वेन स्तवकर्त्तुर्भक्तस्य यः स्थायी सः (5) सम्प्रयोगाविषयत्वाभावान्न रतिशब्दवाच्यः, किन्तु तस्य स्थायिनो 'भाव' इति स्वतन्त्रसंज्ञा

'विदग्धानां मिथो लीलाविलासेन हि यत् सुखम् ।
न तथा सम्प्रयोगेन स्यादेवं रसिका विदुः ॥'

इत्यस्य प्रयोगविषयाया स्त्रीजनालम्बनायाः पुरुषालम्बनायाश्च रतेः स्तुतिः श्रीरूपगोस्वामि-चरणानां ग्रन्थे ।

(च) आन्तरं भावमुपजीव्य वर्त्तमानाया अपि रतेर्ब्बहिरभिव्यक्तितो व्यक्तितोचिता । अस्याश्चेह लक्षितायाः प्रीतेर्म्मनोद्रुतिमयत्वकथनम् । मैत्र्याश्च स्पर्शादिनाभिव्यक्तिमत्त्वं, सौहार्द्दे त्वपरिवर्त्तनशीलत्वमेव मुख्यं लिङ्गं, विश्वासो मित्रभावश्च सख्यं द्विविधमीरितम् । अस्या अत्र वैष्णवशास्त्रदर्शितपद्धत्या आलम्बनभेदेन विभागः, विस्तरस्तु भक्तिरसामृत-सिन्ध्वादौ द्रष्टव्यः । एषु भेदेषु केचित् कामानुगाया भक्तेर्विम्बानुविम्बभूताः, केचन सम्बन्ध-रूपायाः, इत्यादिविचारस्तु नात्र कृतः । भावः—एष सर्व्वातिशायिमाहात्म्याच्च इहाभावा-स्वाद्भिन्न इत्यमन्यत्र लक्षितश्च—

'शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक् ।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥' (भावभक्तिलहर्य्याम्)

मैत्रसख्ययोर्भेदो दर्शितः श्रीमद्रूपगोस्वामिचरणैः लक्षणप्रदर्शनव्याजेन यथा—

"भावज्ञैः प्रोच्यते मैत्रं विस्रम्भो विनयान्वितः ।"
"विस्रम्भः साध्वसान्मुक्तः सख्यं स्ववशतामयः ॥"

रतौ प्रीतिस्तु न तथा, रागस्य विभावो विलासो विस्तारश्च वर्त्तते । अस्याश्चानयोः सौहार्द्दं—श्रीकृष्णरुक्मिण्योः प्रीतौ रतिर्व्वा ।

(5) एवमेव सार्व्वत्रिकः पाठः । 'रतिशब्दवाच्य इति' इत्युक्ते व्याख्यातार्थसामञ्जस्यतया साधुः स्यात् ।

**सैव देवादिविषया रतिर्भक्तिश्च कथ्यते ॥ ६८ का**

**सैव चेतोरञ्जकता—चादिशब्दाहुत्प्रभृतिश्च ।**

**या सम्प्रयोगविषया साऽप्यवस्थाविशेषतः ।**

**पाकात् पाकान्तरं प्राप्य चरमे पर्य्यवस्यति ॥ (ञ) ६९ का**

शेषेणाह—सैवेति। देवः श्रीकृष्णस्तस्य देवत्वसर्व्वव्यापकत्वादिरूपेण या चेतोरञ्जकता सैव भावः—अयमेव भक्तिरसो भवतीत्यग्रे वक्ष्यति (झ)। किञ्चायं भावरूपस्थायी सम्प्रयोगविषया या रतिस्तस्याः परिणामरूपो यो भावस्तस्मात्भिन्न एव ज्ञेयः।

अवस्थाविशेष इति—रत्युत्तरश्रवणकीर्त्तनादिभजनानां पौनःपुन्येन जातो यो रतेरुत्-कर्षरूपावस्थाविशेषस्तं प्राप्येत्यर्थः, सा, रतिरुत्कर्षदशां प्राप्य प्रथमपाकाङ्गावरूपेण

---

(झ) भक्तिरसो भविष्यतीति—एतच्च सम्प्रदायिमतानुसारेण—अलङ्कारनिबन्धे भक्तिरसस्य रतित्वेन भावतया वा निर्व्वाहो नातिदुःसाध इति पूर्व्वमेवावोचाम।

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥"

सा च भक्तिर्न सामाजिकमात्रहृदर्त्तिनी, अतोऽलङ्कारशास्त्रे तमनुलक्ष्य भेदादिकल्पनं न यथार्थम्। कविकर्णपूरगोस्वामिपादास्तु क्वचिदुभयमतसामञ्जस्यसाधनमिच्छन्तः स्वकीयमतजाले असामञ्जस्यं जटिलतामानयन्ति। यो भावोऽत्र रतेर्भेदत्वेनोक्तः स पश्चाद्भिन्नत्वेन गण्यत इति नातिसुन्दरं समाधानम्।

(ञ) सर्व्वे एव भावा यथोक्तविवर्त्तभेदाः—चरमे विवर्त्ते महाभावस्य विकाशः।

'शृङ्गाररससर्व्वस्वं शिखिपुच्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥'

इति लीलाशुकोक्तौ सैव परिणतिरुपभोग्या। रसस्याभिव्यक्तेः परां काष्ठामालम्ब्योक्तं रससर्व्वस्वं श्रीमद्भागवते प्रथमे—

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥"

'प्रेम'पदेन साधारण्येन परिचितायाः अस्या रतेः प्रकर्षतारतम्यात् काश्चित् संज्ञान्तराण्यपि प्रदर्श्यन्ते, ते चेत्थं निर्द्दिष्टा नीलमणौ—

"इयमेव रतिः प्रौढ़ा महाभावदशां व्रजेत् ।
या मृग्या स्याद्विमुक्तानां भक्तानाञ्च वरीयसाम् ॥
स्यादृढ़ेयं रतिः प्रेमा प्रोद्यन् स्नेहः क्रमादयम् ।
स्यान्मानः प्रणयो रागोऽनुरागो भाव इत्यपि ॥

चरमे पाके यतः पाकान्तरं नास्ति, यथेक्षुरसः सितोपलापाकावधिः।

यदुक्तम्—

"यथेक्षूणां रसो ह्यामः पाकात् पाकान्तरैर्गुडः।
गुडोऽपि पाकतः पाके चरमे स्यात् सितोपला॥
तथा रतिर्भावपूर्व्वरागरागाख्यपाकतः।
अनुरागः स प्रणयप्रेमभ्यां पाकमागतः।
स्नेहपाकमथो याति महारागोऽयमुच्यते॥"

Anantadasa's Rasa-sudhakara (?)

Sahityadarpana. Chap III 'निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिये'त्युक्ते रतेः प्रथमः पाको भावः

कोऽसौ रसो यस्याभिव्यक्तये विभावादीनां कारणत्वमित्यपेक्षायां(6)

तत्स्वरूपमाह—

परिणतो भवति। अत्र पाकस्तु भजनस्य पौनःपुन्यमेव ज्ञेयम्। तत्र दृष्टान्तो यथेति—आमोऽपक्व इक्षुरसः पाकात् पाकान्तरैः पाकपौनःपुन्येन गुडो भवति, यथा च गुड एव पाकपौनःपुन्येन खण्डो भवति, तथा भावोऽपि भजनपौनःपुन्येन रत्यणेर्व्वयोतृकर्षेदशां प्राप्य पूर्व्वरागो भवति, एवं क्रमेणोत्कर्षस्य परमकाष्ठाऽपन्नो महारागः आनन्दस्य परमावधिरूपः—एतादृशो महारागो गोपीनामेव, नान्येषां भक्तानाम्, अतएव 'त्वय्येव चैव परमात्मनि रूढ़भाव' इत्युक्तवता उद्धवेनाप्यस्यैव रूढ़भावत्वेनोत्कर्षः ख्यातः। एवम् 'आसामहो चरण-रेणुजुषामहं स्या'मिति पद्येन गोपीनामेव चरणधूलिप्राप्तौ स्वजन्माकाङ्क्षा ख्याता, न तु कदापि रुक्मिणीसत्याप्रभृतीनां, कुत्रापि प्राप्त्येऽदृष्टत्वात्। सितोपलेति—'मिछ्' इति प्रसिद्धाया मत्स्यण्डिकायाश्चरमपाकाच्जातः कश्चिदपूर्व्वपदार्थविशेषः पश्चिमदेशे प्रसिद्धः। निर्व्विकारेति—विकारोऽत्र विषयेऽत्यासक्तिः, तद्रहिते चित्त इत्यर्थः।

बीजमिक्षुः स च रसः स गुड़ः खण्ड एव सः।
स शर्करा सिता सा च सा यथा स्यात् सितोपला॥
अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु षट्।
प्रायो व्यवह्रियन्तेऽमी प्रेमशब्देन सूरिभिः॥"

विस्तरस्तत्रैव द्रष्टव्यः। रसार्णवसुधाकरे त्वयमर्थ उपमानान्तरेण सूचितः—प्रेमविलासानान्तु सर्व्वेषां तत्र चात्रैव यथाक्रममेकैव संज्ञापरिपाटी। तथा च—

अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः॥

6) एवं (ग) पुस्तके पाठः। अन्यत्र सर्व्वेष्वपि पुस्तकेषु 'कारणत्वमित्यपेक्षया' इति पाठः।

**बहिरन्तःकरणयोर्व्यापारान्तररोधकम् ।**

**स्वकारणादिसंश्लेषि चमत्कारि सुखं रसः ॥ ७० ॥**

अयन्तूत्तमप्रकृतीनामनुकार्य्याणां स्वतःसिद्ध एव (ट), काव्यादौ तु

अथ रससाक्षात्कारे परिपाटी यथा—आदौ श्रवणकीर्त्तनादिभजनानां पौनःपुन्यादानन्दरूपाया रतेराविर्भावः, तदनन्तरं विभावादिसमवधानदशायां रतेः साक्षात्कारः, तदनन्तरं रतिरेव रसरूपा भवति, तदनन्तरं पुनस्तैरेव विभावादिभिः करणै रससाक्षात्कारः। एवं सति रतिसाक्षात्कारे यादृशानन्दाविर्भावस्ततोऽपि कोटिगुणितानन्दाविर्भावो रससाक्षात्कारे ; एतदेवाह—बहिरिति। सम्प्रति रतिसाक्षात्कारे यादृशसुखानुभवः, एवं पूर्व्वस्मिन्ननेकपदार्थविषयका (7) ये ये सुखानुभवा आसन्, तेभ्यः सर्व्वेभ्यः सकाशात् कोटिकोटिगुणाधिको यो रसदशायामानन्दानुभवस्तज्जन्यातो यश्चमत्कारस्तद्विशिष्टं सुखं रस इति रसलक्षणम्। अथ कोऽसौ चमत्कार इत्याकाङ्क्षायामाह—यथा बहिर्व्वस्तूनामनेकेषां मध्ये कस्यचित् सर्व्वोत्कृष्टाद्भुतवस्तुनो दर्शनाच्चेतस्य चमत्कारो जायते, तत्र चमत्कारपदार्थो चेतस्य स्फारतारूपः, तथैवानाप्यन्तर्व्वस्तूनां मध्ये रसतादशायां कस्यचिदद्भुतसुखास्वादानुभवाज्जाता चित्तस्य स्फारतैव चमत्कारः। चमत्कारि सुखं कीदृशं भवेदित्यपेक्षायां विशेषणमाह—बहिरिति। रसस्योदयदशायां बहिरिन्द्रियाणामन्तरिन्द्रियाणाञ्च रसानुपयोगिपदार्थमात्रे यो वृत्तिरूपो व्यापारस्तस्य रोधकं प्रतिबन्धकमित्यर्थः।—तथा च रससाक्षात्कारे कारणीभूतविभावादेरभानं, न तु तदानीमिन्द्रियाणां पदार्थान्तरस्य ज्ञानजनने सामर्थ्यमस्तीति भावः। तदेव पुनर्व्विशेषणान्तरेणाह—स्वकारणेति। स्वकारणानि विभावादि, (8) तस्य संश्लेषि,—तथा च विभावादिसंवलितस्यैव रसस्य साक्षात्कारो जायत इत्यर्थः। यथैकमेव दधि वस्तु सितामरिचकर्पूरादिनानावस्तुमिलितं सद्रसालाख्यं भवति, तस्यास्वादनकाले चित्ररसस्य प्रत्ययो भवति, तथेत्यर्थः।

अयन्त्विति—अयं रस उत्तमप्रकृतीनामप्राकृतानामनुकार्य्याणां भक्तानाम्। सद्

---

(ट) रसस्य स्वरूपलक्षणं तटस्थलक्षणञ्च दर्शितं टीकाकृताऽऽस्वादस्वभावसूचनेन विशेषणप्रपञ्चनेन च। एवंविधेषु स्थलेषु प्रमाणद्वारा विशदीकरणं विना नान्या गतिः—सैव टीकायां दर्शिता। 'रसे सारश्चमत्कारः' इति चमत्कारस्यैव प्राधान्यम्। दर्पणादिषु विवक्षेयस्यैव 'अलौकिकचमत्कारप्राणः कैश्चित् प्रमातृभिः। स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥' इत्यादि वाक्येन परामर्शो विहितः। चमत्कारीति—चमत्कारप्राणतैव बोधयिता।

---

(7) एषोऽपि सार्व्वत्रिकः पाठः। स च 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ'इति न्यायेन समाधेयः।

(8) एवं (ख) (ग) पुस्तकयोः। अन्यत्र 'स्वकारणं विभावादि' इति पाठः।

सामाजिकानामेव—तेषां सर्व्वरसाभिव्यक्तिष्वप्येक एव पूर्व्वोक्तः कवना-स्वादकान्द्रवेतोधर्म्मविशेषः स्थायी। तत्र युक्तिर्दर्शयिष्यते।

**रसस्यानन्दधर्म्मत्वादैकाध्यं, भाव एव हि।**

**उपाधिभेदान्नानात्वं, रत्यादय उपाधयः॥ (ठ) ७१ का**

रत्यादयः स्थायिनः। यथा नानाविधशरावसलिलतारतम्येऽपि तरणि-बिम्बप्रतिबिम्ब एक एव, तथोपाधिगत एव भेदः, नानन्दगतो रसस्य (9)। उक्तप्रकारेषु स्थायिषु कश्चिदुभयनिष्ठः, कश्चिदेकनिष्ठ उभयनिष्ठश्च। तत्र रत्यादिरुभयनिष्ठः, जुगुप्साऽऽदिरेकनिष्ठः, क्रोधादिरेकनिष्ठो द्विनिष्ठश्च—इत्यनु-कार्य्याणामेव, सामाजिकानामेक एवेत्युक्तत्वात् (ड)।

यथा रत्यादीनां भावपूर्व्वरागादिरूपो नानाविधपाक उक्तस्तथा रसस्याप्येकस्य पाकान्नाना-विधत्वं कथं नोक्तं, तत्राह—रसस्येति। आनन्दधर्म्मत्वात्परमानन्दरूपत्वादैकाध्यमेक-विधत्वम्। यथा सितोपलायाः पाकान्तरं नास्ति, यथा वा महारागस्यापि परमानन्दत्वेन पाकान्तरं नास्ति, तथैव रसस्यापि। अतएकस्य रसस्य न नानाविधत्वं ज्ञेयम्। भाव इति—नानात्वं प्राप्नोतीति शेषः। 'यथा नानाविधशरावे'त्यादिपाठः क्वाचित्को न सर्व्वसम्मतः।

---

(ठ) यथैक एवाकाश उपाधिभेदात् घटाकाशपटाकाशादिसंज्ञया पृथक् पृथ-गुल्लिख्यते, तथैक एव रस आलम्बनोद्दीपनादिनानाविधोपाधिभेदेन कदाचिच्छृङ्गारतया कदाचिद्वीरत्वेन कदाचित् करुणाख्यया वा व्यवह्रियते। एवमेव रसान्तरेष्वप्युदाहृतपरि-भाषायां रतेर्गौणीमुख्याभेदेन संगमनम्। आनन्दस्तु सर्व्वत्रैव समानलक्षणः समानानुभव-प्रकारश्च—अतो वस्तुगत्या भिन्नसंज्ञत्वेऽपि न स्वरूपतो भिन्नता।

(ड) सामाजिकानां पक्षे तत्तद्भावप्रपञ्चस्य न वस्तुतोऽनुभूतिः, अपि तु ततो जातस्याखण्डस्वरूपस्यानन्दस्यैवास्वादः। अनुकार्य्याणां शृङ्गाररसभाजां कदाचित् सम्भोगः, कदाचिद्विप्रलम्भः, कदाचिन्मानः, कदाचिद्विना वैक्लव्यं दैन्यं वा—तदुप-भुञ्जानानां सामाजिकानामेक एव आनन्दः सर्व्वत्र। एवं वीराद्भुतादिष्वितरेषु रसेषु। न चात्र सामाजिकबोधोपलक्ष्यमेवालङ्कारिकस्य प्राधान्यमिति कृत्वा रसानां भागकल्पना विस्तरेण विचारादिना निन्द्यते 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायादत्रापि विशेषवासुखेन सामाजिकानां बोधोद्घाटने सौकर्य्यमन्वेषणीयम्। एवमाश्रयो

---

(9) एष पाठः (क) (ख) पुस्तकयोर्नास्ति—टीकाकारस्यास्य मूलान्तर्गतत्वे सन्देहात् इति प्रतीयते।

**प्राकृताप्राकृताभासभेदादेष त्रिधा मतः ॥ ७२ का**

एष रसः प्राकृतो लौकिको मालतीमाधवादिनिष्ठः, अप्राकृतः श्रीकृष्ण-राधाऽऽदिनिष्ठः । आभासस्त्वनौचित्यादिप्रवर्त्तितः । स आभासस्त्रिविधः प्रसिद्धकल्पितमिश्रभेदात् । आद्यः प्राक् प्रसिद्धिमात्रोपपन्नः, न तु सम्पत्स्यमानः ; स च रसाभासो भवन्नपि रसपोषकः—यथा नन्दनसम्बन्ध-प्रसिद्धौ मालत्या माधवे रतिपुष्टिरिति प्राकृते, अप्राकृते तु शिशुपालसम्बन्ध-

प्राकृतेति—प्राकृते रस एव नास्ति (८), तदपि यत्त्रैविध्यमुक्तं तत् परमतानुसारेणेति ज्ञेयम् । प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव ;—यतोऽत्र कृमिविड्भस्मान्तनिष्ठेषु प्राकृतनायकेष्वतिनश्वरेषु रसो न भवति, विचारतो विभाववैरूप्यात्तद्विपरीतं घृणामयं वैरस्यमेवोत्पद्यते, तत्रैव रसं वर्णयन्तीत्यर्थः । अतएव ग्रन्थकारेणापि प्राकृतविषय एकमपि पद्यं नोदाहृतं, किन्त्वप्राकृत एव सर्व्वाणि पद्यान्युदाहृतानीति ज्ञेयम् । प्रसिद्धेति—रुक्मिण्या सह शिशुपालस्य सम्बन्धो लोकानां प्रसिद्धिमात्रेणैवोपपन्नः भ्रान्तानां प्रतीतिविषयः, न तु सम्पत्स्यमानः—स सम्बन्धो न तु सम्पन्नो भविष्यतीत्यर्थः । अतः शिशुपालस्य रुक्मिण्यां रतौ रसाभास एव । एवं परोढ़रमणीषु पुरुषस्य रतिरपि रसाभास एव, प्राकृतविषयत्वात् ।

---

यत्रसानामष्टधा विभागः कृतस्तदनुभावादिवद्भिःप्रकाशकत्वमवलम्ब्यानुकार्य्याणां नायकादीनां वस्तुत्वमनुसृत्य, न तु रसस्वरूपस्यानन्दस्योद्रेकतारतम्यतया वा भेदेन । रसात्मवादिनामनुभवसाक्षिकानन्दस्य तदानीं वेद्यान्तरस्पर्शशून्यत्वेनालौकिकचमत्कारवत्तया च न भेदकल्पना सम्भवतीति तत्त्वम् । प्रकाशदर्पणकृदादयो वाढ़मेतन्मतपोषका अपि सामाजिकानामेक एव रस इति न स्फुटमभिदधति । तत्रेदमपि तदभिप्रायविलसितं सम्भवि यत्र खलु सर्व्वेषां रसानामानन्दमात्रा आनन्दप्रकृतिश्चैका, वीभत्सजुगुप्साऽऽदिषु शृङ्गार-करुणादित उपलब्धेः पृथक्त्वस्य निर्णेतुमशक्यत्वात् । वयन्तु सम्भावनामप्येतादृशीं न बहु मन्यामहे, कारणञ्च तत्र प्राक् प्रदर्शितमेव । न खलु वहिरावेष्टनभेदत आन्तरानन्दस्य स्वरूपभेदः कल्प्यः;—एवमप्याधुनिकाः प्रतीच्याः काव्यतत्त्वविदः । (Cf. the views of B. Croce, Spingarn, Henderson and others).

(८) प्राकृते रस एव नास्तीति हि सम्प्रदायविदः, तन्मते श्रीकृष्ण एव रसः रसवती, [illegible] प्राकृतजने । मतमेतदालङ्कारिकमतानुसारि नेति टीकाकृतैव सूचितम्—वस्तुतस्तु रसात्मवेदिनो [illegible] प्राकृते रसवत्त्वमपह्नोतुं न प्रभवन्तीति सर्व्वैरपि [illegible]—तथापि [illegible] । [illegible] तथैव [illegible] यदैव ते [illegible], अतः [illegible]

'अलौकिकाश्च ये भावा न तांस्तर्केण योजयेत् ।' इति च । Mahabharata—Udyoga-Parvan.

व्रजवधूनां कृष्णैकतानमानसत्वेन स्वपतिनिष्ठत्वाभावात्तेषाञ्च मायाकल्पिततच्छायाऽनुशीलनेन तदङ्गसङ्गमात् प्रत्युत केवलानुरागमात्रोपाधितया चेतोरञ्जकतया शुद्धत्वमेव ।

---

न रसाभास इति वैष्णवालङ्कारिका भक्तिमार्गाचार्याः श्रीमद्रूपगोस्वामिप्रभृतयः। कौस्तुभकृत रसाभासो भवन्नप्यसौ रसपोषक इति सुचिन्तितं स्वसमीहितं प्रकाशयन्नपि स्वसम्प्रदायमतदार्ढ्यं प्राक् निर्व्वन्धवानिव प्रतीयते। परोढ़रमणीरत्याश्रयं काव्यमुत्तमं काव्यमेवेत्यत्र तु न विभिन्नमतावलम्बिनोरप्येतयोः काऽपि विप्रतिपत्तिः—ध्वनिवैशिष्ट्यमेव कारणत्वेनोपन्यस्य उभयैरपि तैः गाथासप्तशती-अमरुशतक-शृङ्गारशतक-पद्यावल्यादिस्थितानां पद्यानां सत्काव्यत्वेनाङ्गीकृतत्वात्। अप्राकृतविषयकपरोढ़रमणीरतिपक्षे च नाट्यानां रसोऽसौ रसाभासो वेति निर्व्वन्धातिशयः, यतः सकलसहृदयहृदयावर्ज्जनकारिणि रसनिर्य्यासस्वादार्थमवतारिणि साक्षाद्रसकदम्बे 'कृष्णस्तु भगवान् स्वय'मिति भागवतसंहितोदिते किमनेनालीकप्रपञ्चकलिते इव न्यायविवादशौण्डेन। धन्यम्मन्यजीवनानां गोपाङ्गनानां भगवता श्रीकृष्णेन सह 'वृन्दाऽरण्ये विहरता मदा रासादिविभ्रमैः। हरिणा व्रजनारीणां विरहोऽस्ति न कर्हिचित् ॥' इति स्कन्दपुराणीयोपदेशान्नताद्गतादृशं नित्यसम्बन्धत्वं, "कात्यायनि महामाये महायोगिन्यधीश्वरि। नन्दगोपसुतं देवि पतिं मे कुरु ते नमः॥" इति सङ्कल्पमानेषु वा गोकुलकुमारिकाः। तास्वेव कियतीनान्तु पतिभावो हराबभूत् ॥ '... इति, 'गान्धर्व्वरीत्या स्वीकारात् स्वीयात्वमिह वस्तुतः॥' इति च भवतामभिधानात् 'यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः।"……"भविष्यामि पतिर्हि वः' इत्यादि श्रीमद्भागवतदर्शनाच्च भगवतः पतित्वमेवास्तु, 'या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वे'त्यदि 'या मा भजन् दुर्ज्जरगेहशृङ्खला' इत्यादि तत्तत्प्रायात् 'दृष्ट्वा केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया तेनात्र स्खलिताऽस्मि नाथ ! पतितां किं नाम नालम्बसे' इत्याद्यभियुक्तोक्तेश्च लिङ्गमौपपत्यमेवास्तु वा तस्य, नाट्यानां काव्यरसरसिकानां किमपि वक्तव्यमवक्तव्यं वा तत्रास्ते। 'परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः। विचिनुत भवनेषु वल्लवीनामुप निषदर्थमुलूखले निबद्धम् ॥' इति तत्सुहृदिश्च भक्तिप्रकृविलोकनेन भवन्त इव वयमप्योमिति ब्रूमः। अप्राकृताश्रये उक्तलक्षणाया रतेः "बहु वार्य्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च । या च मिथोदुर्लभता सा परमा मन्मथस्य रतिः ॥" इत्यत्र नाऽलङ्कारिकमुनिनिबन्धे या प्रशंसा न तथा काऽप्यलौकिकमिदार्पत्तिरिति। केवलं निर्व्वन्धवद्भिर्भवद्भिरानन्दचन्द्रिकायाम् 'अनन्यपरया स्वीया परकीयां यथाङ्गना। तस्यास्तु केवलं प्रेमा तैरेषा रागिणी मता ॥' इति शृङ्गाररसिकाग्रगण्यता परोढ़ोपपत्योरेव सकलसहृदयहृदयवाचिको रसनिर्य्यासास्वादो दृश्यते' इति यत्सम्प्रदायाश्रयमनादिष्य वङ्गिरिव कथयद्भिराचार्य्यवर्य्यैः सूचिता, अत्र

अत्र रसग्रन्थे काव्यमधिकृत्यैव विचारः (घ)। काव्यं दृश्यं श्रव्यञ्च। दृश्ये शब्दोपात्ता विभावादयोऽभिनायकाश्रया अभिनेयाश्रयाश्च, श्रव्ये केवलं शब्दोपात्ताः। कुतोऽत्रानुकार्य्यगतो रसः? (१०) नाप्यनुकर्त्तृगतः, तेषां

सामाजिकानां रसोत्पत्तौ प्रकारमाह—अभिनायका नटास्तदाश्रयाः—एवं भावानुभाव-कटाक्षादयो नटानामभिनेयास्तदाश्रयाः। अनुकार्य्येति—अनुकार्य्याणां भक्तानां तदानीं तत्राविद्यमानत्वात् नाट्यदर्शनात् पश्चात्त्वाच्च तदानीं कस्य रसो भविष्यतीति पूर्व्वपक्षः। अनुकर्त्ता नटः, नापि तद्गतो रसो भवति। ननु कस्यचिद्दशरथवेशधारिणो नटस्य एवं

---

'नातीव सङ्गतत्वाद्गुरतमुनेर्म्मतविरोधाच्च। साहित्यदर्पणीया न यद्दीना प्रक्रिया प्रायः॥' इत्य-यथा भरतमुनेर्म्मतविरोधमप्राकृतनायकाश्रितरत्यादिविषयं दर्पणेऽनालोचितमसूचितमपि भवत्कृतायां नाटकचन्द्रिकायां प्रकटीकुर्व्वद्भिरनर्थकन्तदुपरि कलङ्कपङ्कक्षेपश्च कृतः, न तत् सर्व्वसहृदयसौजन्यप्रथितनाम्नां वैष्णवानां भवतां यशस्करमिति मन्यामहे। प्राकृतविषयक-परोढ़रमणीरताबाभासतैवेत्यस्माकमालङ्कारिकसम्प्रदायिनां मतं, कौस्तुभकृदपि भवानस्मत्-सपक्ष एव। तत्र युक्तिश्चानौचित्यमेव मूले निर्द्दिष्टं, तच्चानौचित्यं सहृदयसामाजिक-व्यवहारतो ज्ञेयम्। उत्तमप्रकृतिप्रायत्वे परोढ़रमणीरतिः समाजगर्हिता, तच्चेष्टितस्य काव्यनाट्यगतत्वेनोपादेयतयाऽस्वादने 'यद्धर्म्मकृतः स्यात्तं स्पृशतोऽपि तद्भवेत्' इति न्यायात् सभ्यानामपि तद्रूपापत्तेर्वैधर्म्मारस्पर्शोऽवश्यम्भावी। यत्तु 'प्राकृते रस एव न स्त्री'ति साटोपमाशयाविष्कारस्तत्तु भक्तिशास्त्रसिद्धं, न काव्यतत्त्वोपयोगीति प्रागेव प्रतिपादितवन्तो वयम्। अत्रालङ्कारशास्त्रे काव्यास्वादद्वारसाधनमेव मताविष्करणं साध्यमिति न कटाक्ष-पातः, परं भक्तिशास्त्रमुक्तिशास्त्रयोर्यथाऽधिकारभेदो भवद्भिराविष्कृतः, एवमपि काव्य-तत्त्वतोऽत्र साम्प्रदायिकरसतत्त्वस्य भेदाविष्करणं नान्याय्यमिति। अतएव रसस्यात्र ग्रन्थे त्रिधा विभागो ग्रन्थकृतां वैचक्षण्यं द्योतयतितराम्। 'अप्राकृते तु', इत्यारभ्य स्थितस्य 'सर्व्वा-गोचरत्वाच्चे'त्यन्तस्य मूलग्रन्थस्य सन्दर्भस्यानन्दचन्द्रिकायामुद्धारः कृतश्चक्रवर्त्तिचरणैः।

(घ) एष एव प्रकृतः ग्रन्थः आलङ्कारिकनिबन्धो रसतत्त्वनिर्द्धारश्च इति निपुणं स्वाशय-सूचनं स्वसम्प्रदायिनः प्रति ग्रन्थकृत इत्यस्माकं स्थूलतः प्रतिभानम्। 'श्राव्यं काव्यं श्राव्य-काव्यं काव्यश्राव्यञ्च भेदतः। चतुःप्रकारः प्रसरः सतां सारस्वतो मतः॥' इत्याद्यभियुक्त-तमदर्शितभेदतः भक्तिसम्प्रदायप्रदेशकृतो निबन्धवन्धान्यस्मात् रसास्वादनजीवितस्य काव्य-कदम्बकस्य वैशिष्ट्यमनुमीयते। यद्यप्यत्र ग्रन्थे आदिमकिरणे काव्यप्रयोजनप्रदर्शनावसरे 'यशःप्रभृत्येव फलं नास्य केवलमिष्यते। निर्म्माणकाले कृष्णस्य गुणलावण्यकेलिषु॥ चित्त-स्याभिनिवेशेन स्वान्तानन्दलयस्तु यः। स एव परमो लाभः स्यात्काव्यस्य तथैव सः॥' इति

---

(१०) 'कुतोऽत्र नानुकार्य्यगतो रस' इति मुद्रितपुस्तके निर्द्दोषः पाठः।

मिथ्याऽभ्यासप्रकटनमात्रकौशलेन स्वादकत्वाभावात्। यदि तु विगलित-वेद्यान्तरत्वमनुकर्तॄणामपि दृश्यते, तदा तेषामपि सामाजिकत्वमेव। अनु-कुर्वन्तु संस्कारवशादेव जीवन्मुक्तानामाहारविहारादिवत्—तेन सामाजिका-नामिव रसः। (द)।

तन्मदेव्यापारिणो नटस्य च लोके रसोत्पत्तिः श्रूयते, तत्राह—यदीति। ननु नटस्य सामाजिकस्य रसानुभवकाले विगलितवेद्यान्तरत्वात् कथमनुकरणं सम्भवति, तत्राह—संस्कारवशादेवेति।

---

भक्तिमुक्तिदत्वस्यापि काव्यस्य प्रयोजनत्वेनोक्तं तस्यातिरिक्तमेव, न सर्वस्य तदैकान्तिकत्वेनेतर-व्यवच्छिन्नतया वा सम्भवतीति स्मरणीयम्। एवमेव धर्ममोक्षशास्त्रप्रतिषिद्धेऽशुरागिणि वेश्याजनादावस्मिन् भावानुबन्धे रसत्वं काव्योपयोगीति नोक्तव्यं वचः।

(ए) रससद्भावे 'प्रमाणसर्वस्वैवात'—स च सामाजिकानामेव केवलं सम्भवति। अतएव रसो नानुकर्तृगतः, नाप्यनुकार्यगतो वा, परमुपलब्धृगत एव। निखिलजगत्-स्थितिकर्तो धर्मस्येवास्याप्यास्वादनमेव जीवनं सेवनं भोगो वा, स एवेह परः पदार्थः। तथा च कश्चिदाधुनिकः प्रतीच्यमनस्तत्त्वकोविदः—

[ Cf. in another context. 'Religion is neither an act of knowledge nor a rule · *it is a life, it is an experience* ; and this life has its source in the deepest part of our being, viz. feeling. We cannot proceed through knowledge of religion to religion—this latter is an original fact. —Emile Boutroux in *Science and Religion in Comtemporary Philosophy*, translated into English by Jonathan Nield (1909.)]

स च रसास्वादनं विना नोत्पद्यत इति प्रागेवावोचाम। त एव सामाजिकधुर्या ये कविप्रतिभासमुत्थापितकाव्यहारेण महास्वादसहोदरस्य रसास्वादस्य विषयिणो जायन्ते। सामाजिकत्वस्येव कविकाव्यानि वस्तुसंस्काराणि सफलानि च जायन्ते। केचिदाधुनिकाः पाश्चात्यकाव्याभियुक्तय आप्तवाच इव सामाजिकत्वमेव कवेः स्वप्रतिभोत्कर्षे चरमं लक्ष्यं मन्यमाना एवमुद्घोषयन्ति—

[Cf. Spingarn—(*Creative Criticism*) (*p.43*) : —*The identity of genius and taste is the final achievement of modern thought on the subiect of art*, and it means that fundamentally in their most significant moment, the creative and the critical instincts are one and the same].

यश्चोऽप्राकृतमतोऽप्युपभोग्यत्वरागतत्त्वं मूलेऽस्य इतिप्रतीके—तथाहि षष्ठेऽङ्कु-रियमाणिक्याद्यनन्तरसन्दर्भे।

तथाहि नटेनानुक्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन विगलितवेद्यान्तरतया तदेकस्फूर्त्तिमनायेन अद्भुतमिदं रामसीतयो रतिकलाकौशलम्, अद्भुतमिदं रामरावणयोर्युद्धम्, अद्भुतमिदं प्रेतरक्षादिविचेष्टितम्—इत्यादिना सर्व्वेष्वेव रसेषु—

रसे सारश्चमत्कारो यं विना न रसो रसः ।
तच्चमत्कारसारत्वे सर्व्वत्रैवाद्भुतो रसः ॥ (ध)

इत्यादिदिशा चमत्कारपूर्व्वकमद्भुतत्वातिशयस्फूर्त्तौ सम्यङ्मिथ्यासंशयसादृश्यप्रत्ययातिरिक्तेन प्रत्ययविशेषेण चित्रोत्कीर्णाभिरूपप्रतिमादिष्विव 'इमे रामसीते', 'रामोऽयं सीताशोकशीर्णः', 'रामरावणावेतौ', 'व्याघ्रोऽयं जनोपप्लावकः', 'श्मशानमिदं शवसमूहाम्लमांसाशनमत्तोन्मत्तपिशाचादिभूतसङ्कुल'मिति कृत्रिमेष्वपि तेषु विभावादिष्वकृत्रिमवत् प्रतीयमानेषु स्वगतरसवासनाधौतरजस्तमस्तया (ध) स्वच्छतरेषु तेषां चेतःस्वेव एवानन्दो जायते। न तु तेषामेकस्मिन्नेव चेतसि रत्यादयः सर्व्वे स्थायिभावाः

सनाथेनेति—रसोपयोगिविभावादिस्फूर्त्तिसहकृतेन क्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन हेतुना सर्व्वेषु रसेष्वद्भुतातिशयस्फूर्त्तौ सत्यां सम्यङ् निश्चयः। तथाच निश्चयमिथ्याऽऽदिप्रत्ययातिरिक्तेन केनचिदनिर्व्वचनीयप्रत्ययविशेषेण हेतुना कृत्रिमेष्वपि विभावादिष्वकृत्रिमवत् प्रतीयमानेषु सत्सु सामाजिकानां चेतःस्वेव एवानन्दो जायत इत्यन्वयः। तेषामिति—उत्साहशोकविस्मयादीनां परस्परविरुद्धानां युगपदेकत्र

---

(ध) रसस्यालौकिकधर्म्मित्वं चमत्कारप्राधान्यञ्चोपलक्ष्य प्राचीनमतोद्धारपुरःसरमेवमभिधानम्। न ताव'दद्भुत'पदेनात्र पारिभाषिकतन्नामकरसविशेषस्य ग्रहणं, यतः सर्व्वेष्वेव नवसु रसेषु स एवाद्भुतापरपर्य्यायचमत्कारकारी कोऽपि पदार्थो वरीवर्त्ति। रश्मिष्विव बलात् सहीताऽस्मन्मनोवृत्तिरलौकिकत्वोपलब्धिमुपभुञ्जाना सान्द्रानन्दत्वमुपैति। एतदेव रसस्य रसत्वम्, एतावती च तस्य रस्यता।

Cf. Longinus -*On the Sublime* (Translated by Dr. Saintsbury in his *Loci Critici*)—"What is out of the common leads an audience not to persuasion but to ecstasy..... ....*"I should certainly lay it down that there is nothing so eloquent as real passion* standing, where it ought, in enthusiastic afflatus of inspired madness and filling the phrase with a sort of Delphic rapture."

सन्ति, तेषां परस्परविसदृशानां युगपदेकत्र स्थितेरभावात्। नापि यत्नादेवैतस्मि रतेः स्थायित्वं, न च शमिनास्तेषां भयशोकादिसत्ता—अपि तु सर्वरसचमत्-कारसाधक एक एवास्वादानन्दः कश्चन चेतोधर्म्म इति—अतो भयानक-बीभत्सादेः काव्यनाट्ययोरेव रसता, न लोके (न)। अतएवोक्तम्—

स्थितेरभावात्। दोषान्तरमप्याह—नापीति। यतिनां शमप्रासिनां चित्ते सर्व्वत्र समदृष्ट्या निर्व्विकारत्वेन भयशोकादिस्थायिभावानामसम्भवात्तेषां रसास्वादो न स्यात्—इति तु परमतानुसारेणैवोक्तम् (न)। वस्तुतस्तु तेषां ज्ञानित्वेन चित्तस्य कठोरत्वाद्रसास्वादेऽधिकार एव नास्ति;—तथाचोक्तन्तृतीयस्कन्धे—'तथापि चित्तमड़िम्नं ज्ञानकैर्व्वियुक्ते' इत्यादिना चित्तस्य [illegible] महाकठोरत्वमुक्तम्।

---

चमत्कारश्रावणेति—एतदेव सुस्पष्टमुपकरणं रसस्फूर्त्तिसमाप्तौ—गलन्तु सर्व्वैव [illegible] सहसाऽमृतमय इव कश्चनानन्दकन्द इति सारस्वतधाराणां धन्यम्मन्यानामनुभूतिः। रसस्फूर्त्तिश्च या वास्तवान्यथा वासनास्थितत्वात्, न तु गगनकुसुमगन्धोपलब्धिप्रवृत्तिवत् कल्पनाकल्पिताऽवास्तवीयेति वेदितव्यम्—अत्रैव भावनासुक्तिवादिनां भट्टनायकादीनां मताद्व्यक्तिवादिनामभिनवगुप्तपादादीनामालङ्कारिकोपजीव्यानां मतस्य वैलक्षण्यम्। एतामेव रसस्फूर्त्तिमभिलक्ष्य श्रीवाग्देवताऽवतारस्य मम्मटभट्टस्य रसस्वरूपनिरूपणे माधुरीमयी सन्दर्भसूक्तिः—'पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्व्वाङ्गीणमिवालिङ्गन्नन्यत् सर्व्वमिव तिरोदधदि'-त्यादि। इदानीन्तनानुभूतिसंवेद्याऽतीतानुभवप्रत्यभिज्ञास्मृतिजड़िता वा स्वगतरसास्वादनाऽधुनिकैरपि प्रतीच्यकोविदैः सामाजिकसंस्कारोद्बोधकताकल्पे स्वीक्रियते स्मर्यते च।

(Cf.—Impressiveness consists in greater intensity of present feeling and in taking a strong and pe1manent hold of the memory.—Bain –. *Rhetoric and Composition.* Part I p. 258)

(न) रतिहासप्रमादीनां लोकेऽनुभूतानां सत एवानन्दः सम्भविता, काव्ये नाट्ये च निबद्धानां तेषामानन्दात्मकत्वमानन्दोद्बोधकत्वञ्च वर्द्धततराम्। भयानकबीभत्सादिनां लोके वैरस्यं विमुखीभावश्च प्रायः सम्पद्यते—तथाहि य तावदसंख्यो मानवकः यः कर्म्मेऽस्मिन् भरत इव मृगेन्द्रपोतेन विक्रीड़ितः—'जिंभ रे सिंहशावका जिंभ दंताइं दे गणइस्सं' इत्यभिदधदन्तरानन्दं विन्दते अतत्त्वपाश्च योषित्सिद्धबाध्यमानकाले वै प्रेतरङ्गवद्वने स स्नानस्थलेऽमन्दमानन्दसन्दोहमुपभुङ्क्ते। काव्ये नाट्ये च तेभ्य एव भावेभ्य आनन्दोत्पत्तिरिति न किमपि चित्रम्। पुरःस्थात् कर्म्मसम्राड्वतो वीराङ्गनमेव कावलि, चित्रार्पितारम्भास्वादानन्द—इति विश्वजनीनाऽनुभूतिरेवात्र निदर्शनम्। यत्तु 'अष्टौ नाट्ये रसा' इति, तदुपलक्षणं, काव्येऽपि नाट्यायमाने ते—उभयत्रापि नवमः शान्तस्य

रिपून् भूमौ सुप्तान् कलयति समं देवनिकरै-
र्जरासन्धस्यासौ जयति भुजवीर्य्यं सुरभिदः ॥ १

अत्र प्रकृते उत्साहः स्थायी—स च द्विनिष्ठः। आलम्बनविभावो जरासन्धस्तस्य च कृष्णः। उद्दीपनमन्योन्यशौटीर्य्यादि। अनुभावो वाक्यवर्षेण स्वश्लाघनम्। व्यभिचारी गर्व्वौग्रताऽमर्षचपलताऽदिः। एतैः परिपुष्टः स्थायी रसतां प्राप्तः। स चानुकार्य्ये भगवति प्रकृते परोक्षः, काव्यश्रवणात् सामाजिके प्रत्यक्ष इति सर्व्वत्रोह्येयम्। सजातीयालम्बनस्तूह्यः। कैश्चित् सखिभिः सह युद्धमुदाह्रियते—तत्तु लीलाविशेष इति प्रकृते न लिख्यते (फ)।

एष च युद्धदानदयाधर्म्मपूर्वत्वाच्चतुर्द्धा। सर्व्वत्रोत्साहः स्थायी। अन्यान्युदाहरणानि।

एतच्च स्वस्वश्लाघावशात् सर्व्वाः क्रियाः सर्व्वदैवालातचक्रवत् पश्यन्तीति भावः। तस्य जरासन्धस्य विजातीयालम्बनः श्रीकृष्णः। प्रकृते, न तु नटवत् कृत्रिमे। एवम्भूते भगवति स एव इदानीन्तनलीलानां लीलाश्रयत्वाच्च सर्व्वेषामप्राकट्येन परोक्षः, सामाजिकानान्तु आस्वादाङ्कुरकन्दभूतस्य स्थायिनोऽचिन्त्या शक्तिरीदृशी याऽप्रकटामपि तत्तल्लीलां काव्यनाटकगतां साक्षात्कारत्वेन प्रकाशयति—अतस्तेषां स रसः प्रत्यक्षरूपः। सजातीयालम्बनो महादेवादिः। सखिभिः श्रीदामादिभिः सजातीयालम्बनैः सह श्रीकृष्णस्य युद्धमुदाह्रियते। लीलाविशेष इति—जरासन्धस्य यथा द्वेषक्रोधादिजन्ययुद्धस्थायिरूप उत्साहः स्थायी तथा श्रीदामादीनां न, किन्तु कौतुकविशेष इत्यर्थः।

एष चेति—युद्धवीर दानवीर दयावीर धर्म्मवीरा इति चतुर्द्धैव रसो भवतीत्यर्थः।

---

(फ) कैश्चिदिति—वैष्णवालङ्कारिकैरिति शेषः। वस्तुतस्तु सखिभिः सह युद्धे न तावद्दुःखविजयादिकर्म्मणि तात्त्विकं किमपि तात्पर्य्यम्, अतो तस्यागणनमेव वरम्—श्रीकृष्णस्य निखिलमेव कार्य्यं लीलाविलसितमिति चेत्—दार्शनिकसुलभप्रौढोक्तिस्तत्, स च मतः रसस्यैकध्यमेव प्रमापयति, न तदस्माकमरुचिरं, परं भेदश्चेत् कर्त्तव्यो रसानां तदा सखिभिः सह कौतुकयुद्धस्य वीररसमध्येऽन्तर्भावो न युक्तिरिति। एषु रसानां लक्षण-प्रदर्शनकारिकासन्दर्भेष्वनुक्तान्यत्र तत्तद्दैवताऽनुभावादीनि तान्यपि दर्पण-रसार्णवसुधाकरादितो ज्ञेयानि। मूले युद्धवीरस्यैवोदाहरणोपन्यासः—इतरेषां सकलसुचरितनिकायमये श्रीकृष्णे तत्र सम्भवेऽपि न वैशद्येनेह प्रदर्शनम्। दानवीरो जामदग्न्यः, दयावीरो नागानन्दनायको जीमूतवाहनः धर्म्मवीरो युधिष्ठिर इतीतरे—तत्तच्चरितमूलान्युदाहरणानि तेषु तेषु ग्रन्थेषु दर्शितानि।

अथ करुणः—

दोर्गुप्तायां मधुविजयिनो हा कथं द्वारवत्या-
मन्यायोऽस्यामयमुदभवद्धन्त निष्कम्पनायाम् ।
जातं जातं सुतमुपहरत्येव मेऽकालमृत्युः
को मां त्राता हरिहरि हहा हा हता हा हताः स्मः ॥ २

अत्र शोकः स्थायी । एष एकनिष्ठः । पुत्रनाश आलम्बनम् । पुत्रगतममताऽद्युद्दीपनम् । अनुभावः शिरस्ताडनादि । व्यभिचारी विषाददैन्यग्लान्यादिः । अयन्तु सामाजिकगत एव, नानुकार्य्यगतः परोक्षोऽपि । अयं सामाजिकगतोऽप्यप्राकृतः, कृष्णाश्रयत्वात् ।

अथाद्भुतः—

आलोकः सखि ! लोकलोचनमुदामुद्रेकमुद्भावयन्
सोमस्तोमनिदाघधामनिवहप्रद्योतसर्व्वोहरः ।
मेघे माधवने मणावपि घृणानिर्व्याजको नीलिमा
सामानाधिकरण्यमत्र किमहो चित्रं तमस्तेजसोः ॥ ३

अत्र विस्मयः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः । उद्दीपनं तल्लावण्यादि । अनुभावो रोमाञ्चादिः । व्यभिचारी आवेगमतिचपलताऽदिः । अयं परोक्षोऽनुकार्य्यगतः, प्रत्यक्षः सामाजिकगतः । अयमप्राकृत एव (ब) ।

अस्यां द्वारवत्यामयमन्याय उदभवत् । अन्यायमेवाह—जातमिति । नानुकार्य्यगत इति—पुत्रमरणजन्योत्कटदुःखमानन्दरूपस्य रसस्याविर्भावे प्रतिबन्धकमिति भावः ।

आलोक इति—हे सखि ! विरुद्धमपि तमस्तेजसोः सामानाधिकरण्यं यथा एकत्रैव वर्त्तते इत्यहो अत्याश्चर्य्यम् । श्रीकृष्णे तयोः सामानाधिकरण्यमाह—कृष्णे वर्त्तमानो य आलोकः प्रकाशः स लोकलोचनानामानन्दोद्रेकमुद्भावयन् सन् सोमस्तोमश्चन्द्रवृन्दः निदाघधामनिवहः सूर्य्यसमूहस्तयोः प्रद्योतानां प्रकाशानां सर्वोहर्त्ता । 'आलोको दर्शनोद्द्योता'विति नानार्थः ।

---

(ब) अत्र प्रकृते विरुद्धधर्म्मयोरेकत्र स्थितिरेव विस्मयः—स चालौकिकचमत्कारस्वरूपः, अप्राकृतत्वाच्चाकृताश्रयश्च । 'लोकलोचनमुदा'मिति बहुत्वोक्त्यैतस्य भक्तविलक्षणानामखिलानामेवानन्ददायकत्वं, 'स्तोम' 'निवह' पदाभ्यां तस्यानुपमत्वञ्च सूचितम् । नीलिमप्रशंसनेन तन्नीलिम्नामवर्णस्य लावण्यललितता वर्णिता । नामरूपत एवेदवस्थाज्ञापकता

अथ हासः—

उन्मत्ताभिर्व्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः
क्षोदैः सिन्दूरचन्द्रागुरुमलयरुहां हा धिगन्धीकृतोऽस्मि ।
आर्द्रं गन्धाम्बुसेकैरजनि मम ततो धावितुं नास्मि शक्तो
व्यापद्येऽहं वयस्य ! प्रियसखमव मां मास्त्विह ब्रह्महत्या ॥ ४

अत्र भगवत्सखो विदूषको ब्राह्मणबटुर्मधुमङ्गलो वक्ता । हासः स्थायी । एष कनिष्ठः । आलम्बनं वसन्तोत्सवः । उद्दीपनं विदूषकस्य वैक्लव्यम् । अनुभावो नयनस्फारताऽऽदिः । व्यभिचारी श्रममदचपलताग्लान्यादिः ।

उन्मत्तेति—वसन्तोत्सवजन्यहर्षमदैः करणैरुन्मत्ताभिर्गोपीभिर्मलयरुहां चन्दनानां क्षोदैश्चूर्णैरन्धीकृतोऽस्मि । तथा जलसेकैर्मम जाड्यमप्यजनि, अतः पलायितुमपि न शक्तोऽस्मि । हे वयस्य ! कृष्ण ! अहं व्यापद्ये, म्रिये, अतो मामव रक्ष ।

---

वैष्णवकविसम्प्रदायवर्त्तिता—तस्याश्चात्र कृष्णनिष्ठवर्णमाधुर्य्यस्य प्रकटनं, वर्णगौरवं श्रीकृष्णचैतन्यविग्रहे 'कृष्णवर्णं त्विषाऽकृष्ण'मित्यादिना सूचिते श्रीकृष्णचैतन्ये च सुमहदस्तीत इति साधनघनानामुपासकानामनुभवसिद्धं, वैष्णवकवीनां परा मोक्षोपनिषच्च तदुपजीविकेति सर्वसम्मतम् । "नवजलधरवर्णं चम्पकोद्भासिकर्णं विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् । कनकरुचिदुकूलं चारुबर्हावचूलं कमपि निखिलसारं नौमि गोपीकुमारम् ॥" इति मुकुन्दमुक्तावल्यामस्यैव नवजलधरवर्णगोपवधूटीदुकूलचौरस्य वर्णस्तुत्यवलम्बनाराधना । 'अंसालम्बितवामकुण्डलभरं मन्दोन्नतभ्रूलतं किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम् ॥' 'कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् । सर्व्वाङ्गे हरिचन्दनञ्च कलयन् कण्ठे च मुक्तावलीं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥' इति श्रीकृष्णकर्णामृतादावलौकिकस्यापि तस्यैव रूपप्रकर्षस्य लौकिकवत् प्रत्यक्षायमाणत्वम् । 'अमिया सागरे सिनान करिया बाधिव मधेरि माधा । मरिया हइब श्रीनन्दनन्दन तोमारे करिब राधा ॥' 'ढल ढल काँचा अङ्गेर लावणी अवनी बहिया याय ।' इत्यादि गौडीयवैष्णवकवीनामुच्छ्वसिते प्रतिभाऽमृतवारिधौ रूपच्छायोद्घाटनेन स्वरूपमाहात्म्याविष्कारश्च निसर्गतोऽत्र नः स्मृतिपथमारोहति । प्रथमप्राधुनिककविसन्दर्भे कस्मिंश्चित् भगवत्सत्ताऽनुग्रहीतमचिद्रूपमपि जगद्वस्तुकदम्बकमुपलक्ष्य विश्वकरस्य सुतरामवतार उपभोग्योऽयोनिविहसन्दर्भेऽवलतः—

Into the Elysian fields of thought enters no satisfaction but brings with it youth and strength and ardour ; nor is there a thing in this world

एष त्रिविधः—स्मितं हासः प्रहासश्चेति (भ) ।

अधरोष्ठस्फारतया लक्ष्ययोरेव विस्फुरत् ।
अलक्षितद्विजं धीरा उत्तमानां स्मितं विदुः ॥
विकासहसनद्योतो गण्डाभोगे प्रफुल्लता ।
किञ्चित्लक्ष्यः कण्ठरवो यत्र हासः स मध्यमः ॥
सघर्म्मः साश्रुताम्राक्षः स्फुटघोरकटुस्वनः ।
व्यात्ताननो व्यक्तदन्तः प्रहासो ग्राम्य उच्यते ॥ ७४का

अथ भयानकः—

दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं
सर्व्वं चर्व्वयसीव हन्त वदनेनोद्गीर्णपूर्णार्च्चिषा ।
जिह्वाग्रेण समग्रमुग्रमहसा लेलिह्यसे रोदसी
त्रस्तं मामिह पाहि पाहि भगवन् पार्थोऽप्यपार्थोऽभवम् (म) ॥१

दंष्ट्रेति—वदनेन कथम्भूतेन? दंष्ट्रायाः कोटिभिरग्रभागैः करबैः कठोरादप्यतिकटुना। रोदसी द्यावापृथिव्यौ जिह्वया लेलिह्यसे। अतस्त्रस्तं मां पाहि। पार्थोऽप्यहमपार्थो व्यर्थोऽभवम् अनुकार्य्येऽर्ज्जुनेऽपि। आधारालम्बनेन करणेन भयरसस्य भर्थं विना नायकोत्पत्तिः। यदि शौर्य्यं मति आश्रयत्वेऽप्यानन्दस्तदोत्साह एव स्थायी।

on which the mind thrives more readily than *the ecstasy, nay the debauch, of eagerness, comprehension and wonder. The Buried Temple* of Maeterlinck translated by A. Sutro.

(भ) 'भीषाङ्गतिविषाणां क्रियायाश्च विकारतः। लौकादेश्च परस्थानभिनामनुकृतेरिति। विकासश्चेतसो हासः' इति हासलक्षणं रसार्णवसुधाकरे। द्विविधश्चायम्—'आत्मस्थः परस्थश्च। यदा स्वयं हसति तदाऽऽत्मस्थः, यदा परं हासयति तदा परस्थः।' इति भारतीये नाट्यशास्त्रे। एष चाप्राकृतनिष्ठ उत्प्राशविजृम्भितो वा सुतरां पोषमेति। सुधीन्द्रोऽपि-पोषमाह—'स्त्रीनीचप्रकृतावेव भूयिष्ठं दृश्यते रसः।' सुधीन्द्रादीनां मतान्तरे बहुविधा विशेषाः, ते नामतो लक्षणतश्च नाट्यशास्त्रादिग्रन्थेभ्योऽवगन्तव्याः। अप्राकृतानितराणां उत्तममध्यमाधमप्रकृतिभेदेन वैरूप्यमपि तत्र दर्शितम्। अप्राकृतनिष्ठस्य हासस्य निदर्शनमस्तु हास्यं प्राङ्गनरपक्षतापुष्पतोऽप्योदर्शितः श्लोकः—'भोजनं प्राप्य दुर्मुखे मा प्रविश दर्पं कुरु। दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥'

(म) विश्वरूपदर्शनकल्याणार्ज्जुनस्य कातरोक्तिरियम्—तथा च श्रीमद्भगवद्गीतायाम्—

अथार्जुनस्य भयं स्थायि। स चैकनिष्ठः। आलम्बनं विश्वरूपप्रदर्शकः श्रीकृष्णः। उद्दीपनन्तत्ततद्दंष्ट्रादि। अनुभावः 'पाहि पाही'ति कातर्य्यम्। व्यभिचारी 'अपार्थोऽभव'मिति दैन्यम्। एवं च कृष्णालम्बनत्वात् सामर्थ्यो-साभिख्येनानुकार्य्येऽपि रसतां प्राक् प्राप्त एव। भयेऽपि कृष्णस्फूर्त्तेस्तत्-सम्बन्धादानन्द एवेत्यप्राकृत एव। न तु मालत्यादौ माधवाद्यालम्बनेन मकरन्दस्य भयं विनाऽऽनन्दः। सति शौर्य्ये उत्साह एव स्थायी भवति। तेन कदाचिदानन्दो जायते, न भयतः। तेन प्राकृते न रसता (य)।

अथ वीभत्सः—

दैत्येन्द्राणां मथितवपुषामन्त्रमेदोऽस्थिमज्जा-
मांसासृक्त्वक्स्फुटपटलीस्वादमोदप्रमत्ताः।
कौमोदक्या मधुविजयिनः कीर्त्तिमुत्कीर्त्तयन्तः
सार्द्धं स्वप्नैर्विदधति मुदं प्रेतरङ्का विशङ्काः॥ ६

कौमोदक्या गदया मथितवपुषां दैत्येन्द्राणाम्। अन्त्रं 'आंत' इति प्रसिद्धः, स्फुटं नाडी-ग्रन्थिविशेषः—तेषां पटलीनां समूहानामास्वादकैर्जातो यो मोदस्तेन प्रमत्ताः प्रेतरङ्का मुदं विदधति।

---

'लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः। तेजोभिरापूर्य्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥' 'दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि। दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास॥' इति। प्राकृताश्रितो भयानकरसः प्रायः स्त्रीनीचप्रकृतिः, परमप्राकृताश्रिते तस्मिन् यथेह ऊर्ज्जस्विनः क्षत्रियोत्तमस्यापि भीतिजनने न किमप्यशोभनम्। लोकव्यवहारतः कालाक्रोतिर्न कदापि कस्यापि गर्हावहम्।

(य) न रसता—किमभिप्रायमेतदभिधानमिति पृच्छायां वयं ब्रूमः—यदत्र प्राकृताश्रयिणि भयानकरसे रसता न तावदपह्नुवते कौस्तुभकृद्भिः, परं प्राकृतेऽनुकार्य्ये व्यभिचारिभयेनानन्दस्य बाधात् रसस्यानन्दमयत्वात् न रसवत्ता सम्भवति। उभयत्रापि सामाजिकानामानन्दोद्रेकस्योपलब्धिरिति तु नान्याय्यमिति प्रागेव दर्शितमस्माभिः। 'भयानकवीभत्सादेः काव्य-नाट्ययोरेव रसते'ति (१६८ पृष्ठायाम्) ग्रन्थकृदुक्तत्वादेतत् सुप्रतीतमपि टीकाकृता मतनिर्बन्धप्रामाण्यप्रकटनाय पुनरालिख्यते। सर्व्वेषां रसानामप्राकृताधिकारित्वकथने न काऽपि हानिः—अतो निखिलरसमूर्त्तिरमन्दस्फूर्त्तिः स्वानन्दरसवल्लभः श्रीकृष्ण एवमेकमत्र सर्व्वेषां, परं तेषां प्राकृताश्रयत्वनिरासे हानिरेव बाढं स्यात्। 'यदभिहितं रसोदाहरणादीनां रौद्रो रसः, किमन्येषां नास्ति? उच्यते। अस्मदन्येषामपि ··विकृतविकारोऽत्र गृह्यते, ते हि

अत्र देवासुरसंग्रामावसानमालोकयतां व्योमचारिणां जुगुप्सा स्थायी । स चैकनिष्ठः । शवशरीराद्यालम्बनम् । प्रेतरक्षाद्युद्दीपनम् । अनुभावो मुख-वैकृत्यादिः । व्यभिचारी ग्लानिदैन्यादिः । एतैः परिपुष्टा जुगुप्सा जुगुप्सैव यद्यपि तथापि भगवतः कृतिरियमिति भगवत्स्मरणादेवानन्दः । प्राकृते नत्वानन्दः, अपि तु नटव्यापारदर्शनात् सामाजिकानामिव तत्र रसः ।

यथा वा—

> दृग्वेव करुणार्द्रया सहचरान् समुज्जीवय-
>
> न्नघस्य जठरं गतो गरलजातवेदोऽन्वसून् ।
>
> तदन्त्रधमनीवसारुधिरमज्जलालादिभिः
>
> प्लुतोऽप्यनवलिप्तवच्छुचिरुचिः स जीयाद्धरिः ॥ ७

अत्र भगवत एवानन्दत्वात्तदन्त्रादिदर्शनेनाप्यानन्द एव लीलावतां, तथात्वात् भक्तानाञ्च तस्य स्फूर्त्तिरेव ।

अथ रौद्रः—

> स्पर्शेनापि न वेद्य एव भवता मृत्योर्मुखं गच्छता
>
> किं दोर्भ्यां कलचक्रिमेष भवते विज्ञापनीयो मया ।
>
> येनाखण्डलशौण्डप्रखण्डनकृता गेण्डूकितोऽयं गिरिः
>
> किं रे कष्टमरिष्ट दुष्ट तनुषे गोऽत्र नश्चिह रे (२) ॥ ८

दृग्वेवेति—गरलरूपेण जातवेदसाऽग्निना असून् विगतप्रायान् मूर्च्छितानित्यर्थः, तेषां पार्षदत्वेन नित्यत्वान्न वास्तवप्राणत्यागः सम्भवतीति । प्लुतोऽपि व्याप्तोऽप्यनवलिप्त इव शुचिः शुभ्रा रुचिः कान्तिर्यस्य सः, 'सुन्दरे किमसुन्दर'मित्युक्तेः—उक्तञ्च दशमे—'पङ्काङ्करागरुचिर'मिति । अत्रेति—भगवत आनन्दरूपत्वाल्लीलावतां पार्षदानामपि तथात्वादानन्दरूपत्वात् । अत एवानन्दोऽत्र कृत्स्नाधिक्येनान्त्रादिदर्शनेनानन्दोत्पत्तिरेव—

---

स्वभावत एव रौद्रः' ( नाट्यशास्त्रे षष्ठाध्याये ) इतिवदेतादृशस्थलेऽपि मतपरिणामः सुप्रपञ्चः सुपरस्पेलकं पिष्टपेषणेन ।

(२) अरिष्टवधः श्रीमद्भागवतस्कन्धोदितः ग्रन्थकृत्कृते आनन्दवृन्दावने पञ्चदशे स्तवके वर्णितः । आविर्देवनाम्नादृष्टकर्मक्रियात्मकस्य रौद्र इति संज्ञेति भरतः । क्रोध-स्थायिभावो रक्षोदानवोद्धतमनुष्यप्रकृतिकः संग्रामहेतुकश्चायं रसः । रक्ताक्षनेत्र-भ्रुकुटीकरण-दन्तौष्ठपीडन-गण्डस्फुरण-हस्ताग्रनिष्पेषादिभिरनुभावैरस्य प्रयोगः सामाजिक-

अत्र कोपः स्थायी । स च एकनिष्ठ उभयनिष्ठश्च—अत्र तूभयनिष्ठ एव । आलम्बनमन्योन्यम् । उद्दीपनमन्योन्यविक्रमः । अनुभावो वागाडम्बरादिः । व्यभिचारी गर्वादिः । एवं स्फुटोऽयं रसः—स च भगवति परोक्षः, सामाजिके प्रत्यक्षः । आद्ये विजातीयालम्बनोऽप्राकृतः ; द्वितीयेऽप्राकृत एव ।

अथ शान्तः—

वयो जीर्णं हा धिक् तदपि न हि जीर्णो मदभरः
क्षयं चर्माङ्गेभ्यस्तदपि न हि रागः क्षय इव ।
रदाः क्षीणास्तदपि न हि मोहः, कथमयं
जनः कंसारातेश्चरणकमलाय स्पृहयतु (ल) ॥ ८

न तु प्राकृतानामिव दुःखं, तेषां दुःखरूपत्वेन भयानकबीभत्सितवस्तुदर्शने दुःखमेवोत्पद्यत इति विशेषो ज्ञेयः ।

अग्रीवेति—मत्पार्श्वं कस्यापि हेतुना न्यक्कोऽभिमुखं गच्छता भवताऽहं न वेद्यः न ज्ञातुं शक्य एव—तथा च मद्विषयकज्ञानमेव तव न भविष्यति, किं दोषखिन्नमा मया भवते विज्ञापनीय इति भावः । इन्द्रपराक्रमखण्डनकृता येन दोर्दण्डेनायं गोवर्द्धनगिरिर्गेन्दुकृतः । आद्ये असुरमात्रनिष्ठे कोपे विजातीयालम्बनो भगवान् । द्वितीये उभयनिष्ठे, तदा सुतरां भगवानप्राकृत एव ।

---

प्रत्यक्षता । विजातीयालम्बनोऽप्राकृतः—विजातीयोऽरिरालम्बनं यस्य स भगवानप्राकृतः । अत्र चतुर्थचरणे 'ट'वर्गयुक्तवर्णानां निवेशनेन रसानुगुण्यं प्रकटम् ।

(ल) वयो जीर्णमिति—एवमप्याचार्यशङ्करो समग्रे मोहमुद्गरे विशिष्य 'अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्ड'मिति' पज्झटिकायां निर्वेदमेवोपदिदेश । तदुत्था वैमाधिमंधिकान्तता चात्र विलसति । आह च भगवान् भरतः—'योगीव ध्यानरतो भवति हि निर्वेदवान् पुरुषः ।' भरतीये तु निर्वेदस्य व्यभिचारिभावरूपेण परिग्रहः, न तु स्थायिभावतया—तेन तन्मतेऽष्टावेव रसाः । मतञ्चैतत् प्रागेवालोचितमस्माभिः—षष्ठा-ध्यादीनामभिभावयुक्तिस्तु इत्थमपास्ता दर्पणे—'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः । रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा ॥' इति । अतएव ध्वनिकारादि-मतानुसारिभिः शमस्य स्थायित्वमुक्त्वा शान्तरसस्य प्राधान्यख्यापनाय अचेष्टि । एवमभि-दधुरालङ्कारिकचूडामणयो लोचनकृदोऽभिनवगुप्तपादाः—"मोक्षफलत्वेन चायं परम-पुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः" इति । भर्तृहरिकृतवैराग्य-शतके भक्ताव्यवचितंसव्रकरण्ये च रसस्यास्य वेशुकः प्रसारस्तत्रैव स समास्वादनीयः सेवनीयश्च सहृदयैः ।

अत्र निर्व्वेदः स्थायी। स चैकनिष्ठः। आलम्बनं संसारदुःखम्। उद्दीपनं पुण्यतीर्थादि। अनुभावो विषयासक्तित्यागः। व्यभिचारी मतिधृतिस्मृत्यादिः। एष रसोऽनुकार्य्ये परोक्षः, सामाजिके प्रत्यक्षः। चमत्कारी चायम्।

तथा च—

"यच्च कामसुखं लोके यच्च दिव्यसुखं महत्। Mahabharata
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम्॥"

चमत्कारातिशयेनानन्दातिशयः। अयं श्रीकृष्णभक्त्युपयुक्तो यदि भवति तदाऽप्राकृत एव। यथाऽयं निर्व्वेदो व्यभिचारी सन्नपि शान्तरसे स्थायितां प्राप्य रसतामाप्नोति तथा सैव देवादिविषया रति'र्भाव' इति पारिभाषिकोऽपि भावः [12] स्थायी सन् तत्तद्विभावादिसामग्रीसमवेतो भूत्वा 'भक्तिरस' इति (ब) द्वादश रसा भवन्ति। स पुनर्भक्तिरसः श्रीकृष्णाश्रयो भवन् रत्यादिभिः स्थायिभिर्द्दशविधो भवति। तदन्यत्रोक्तम्।

त्रय इति - अङ्गेभ्यः सकाशाच्चर्म्म स्वयं, तदपि रागः स्वय इव स्वयतुल्योऽपि न भवति।

केचिच्छान्तस्य रसत्वं न मन्यन्ते, तन्मतं दूषयितुमाह—अयमिति। चमत्कारित्वे हेतुं प्राचीनानां श्लोकमाह—तथा चेति। तृष्णाक्षयसुखरूपचन्द्रस्य षोड़शीमेकां कलामपेक्ष्य मर्त्यलोकस्थस्वर्गस्थसुखे नार्हतः—तस्माच्चमत्कारसत्त्वे तस्य रसत्वमवश्यमङ्गीकार्य्यं 'रसे सारश्चमत्कार' इत्युक्तेः। द्वादश रसा इति—पूर्व्वमेकादश रसा उक्ताः, अयमेको रसो मिलित्वा द्वादश भवन्तीत्यर्थः। कस्यचिन्मतेऽसौ भक्तिरस एव श्रीकृष्णाश्रयो भवन् स्थातन्त्र्येण दशविधो भवति, तस्य स्वरूपलक्षणोदाहरणमन्यत्र तस्यैव ग्रन्थ उक्तम्।

(ब) रतिर्भाव इति पारिभाषिकोऽपीति—व्यापकतया 'रति'पदेन प्रीतिस्नेहादीनां निखिलानां चित्तवृत्तीनां परिग्रहः। पारिभाषिकस्य तस्येत्थमर्थो निर्द्दिष्टो रसाकरकृता— 'मिथो हरेर्म्मृगाक्ष्याश्च सम्भोगस्यादिकारणम्। मधुरापरपर्य्याया प्रियताख्योदिता रतिः॥' 'भाव'पदेन रतिशोकोत्साहक्रोधप्रमादीनां सर्व्वेषामेव व्यापकतया परिग्रहः, पारिभाषिकत्वात् 'सञ्चारिणः प्रधानानि देवादिविषया रतिः। उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते॥' इत्युक्तलक्षणपदार्थग्रहः। अत्र लक्षणे देवादौ'आदि'पदेन पुत्रादिविषया रतिरपि गृहीतेति केचित्। रसगङ्गाधरकृदप्येवम्। तन्मते वात्सल्यस्य रसत्वेन न पृथग्गणना। परं श्रीकृष्णविषया सा परो रसः—भक्तिरस इति तस्य संज्ञा। इतश्च प्रागेवास्माभी रसस्वरूपसंख्याव्यालोचनप्रस्तावे सम्यग्विवेचितमिति न पुनरवतारणस्यात्र कृतः।

[12] 'पारिभाषिको भावः' इति (क) (ङ) पुस्तकयोः।

अथ वात्सल्यम्—

आराज्जानुकरोपसर्पणपरो जातस्मितं सत्वर-
मङ्कारोहमनाप्नुवन् कदुदिताविष्णाननचन्द्राननः ।
अभ्यासार्थमुपेक्षितोऽपसरणप्रक्रान्तया सत्वरं
कण्ठेकृतस्तत्र यशोदया न न न नेतराम्बासि बालो हरिः ॥ १०

अत्र ममकारः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः, उद्दीपन-मतद्गतचङ्क्रमणादि । अनुभावः कण्ठेकृततयालिङ्गनादिः । व्यभिचारी हर्षादिः । एष परोक्षो व्रजेश्वरीनिष्ठः, प्रत्यक्षः सामाजिकनिष्ठः । उभय-थैवाऽयमप्राकृतः ।

अथ प्रेमरसः—

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद-
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः ।
त्वं मे ते स्यामहमिति च यत्तच्च नो साधु राधे !
व्याहारे नौ न हि समुचितो युष्मदस्मत्प्रयोगः ॥ ११

अत्र चित्तद्रवः स्थायी । स चोभयनिष्ठः । आलम्बनमन्योन्यम् । उद्दीपन-मन्योन्यगुणपरिमलः । अनुभावो विश्रम्भ निर्व्वन्धनाभावः । व्यभिचारी मतरौत्सुक्यादिः । परोक्षः श्रीकृष्णराधयोः, सामाजिकानां प्रत्यक्षः । प्रेमरसे सर्व्वे रसा अन्तर्भवन्तीत्यत्र महीयानेव प्रपञ्चः । ग्रन्थगौरवभयाद्दिङ्मात्र-

आरादिति—आरान्निकटे जानुकराभ्यां गमनपरो बालः श्रीकृष्णो मातुरङ्कारोहणार्थं सत्वरन् यशोदयाऽपि गमनप्रक्रियायामभ्यासार्थं पुत्रानयनाय सम्मुखगमनं विहायापसरणे तस्य एकदेशगमने प्रक्रान्तयोपेक्षितः श्रीकृष्णो मातुरङ्कारोहमप्राप्य कदुदिताम्लानमुखः पश्चाद्यशोदया सत्वरं यथा स्यात्तथा कण्ठेकृत्वाञ्चितः ।

प्रेयांस्तेऽहमिति—श्रीकृष्ण आह—हे राधेऽहन्ते तव प्रेयान्, त्वं मे प्रेयसी, त्वं मे प्राणाः, अहमपि तव प्राणा अस्मीति । त्वं मे मम, ते तवाहं स्यामिति च यत् तत् सर्व्वं न साधु, यतो नावावयोर्व्याहारे कथाप्रसङ्गे युष्मदस्मत्प्रयोगो न समुचितः—आत्मनोर्द्वि-

---

त्वाद्भवेति कथं भवन्ति ते, तदप्युदाहरणेष्वन्यायपूर्व्वकत्वेनैव दर्शितम् । स पुनर्भक्तिरसो दशविधो भवतीति—शान्त-प्रीति प्रेयो-वत्सल मधुराख्यभेदैः पञ्च, स्वार्था परार्थेति प्रत्येकं द्वौ । अतो दशैव ते । अन्यतोऽवसेयम्—श्रीरूपगोस्वामिप्रभृतीनां निबन्धेष्विति शिवः ।

युक्तम् (13) । केषाञ्चिन्मते श्रीराधाकृष्णयोः शृङ्गार एव रसः (अ)—तन्मतेऽप्येतदुदाहरणं नासङ्गतम् । शृङ्गारोऽङ्गी प्रेमाऽङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता । वयन्तु प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति विशेषः । तथा च—

उन्मज्जन्ति निमज्जन्ति प्रेम्ण्यखण्डरसत्वतः ।
सर्व्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ (ब) ॥ १२

देहत्व एव तादृशः प्रयोगः समुचितो भवति । अत्र तु श्यामपीतदेहद्वययोरेक एवात्मा—यथैकस्मात् कमलनालादुत्पन्नं नीलपीतकमलद्वयं, तद्वदिति ज्ञेयम् । उद्रिक्तता—अङ्गिरसापेक्षयाऽङ्गरसस्याधिक्यम् । एतदभिप्रायेण वयमपि शृङ्गारोऽङ्गमिति ब्रूमः ।

अखण्डरसत्वतोऽखण्डरसत्वात् सर्व्वे उन्मज्जन्ति निमज्जन्ति समुद्रे तरङ्गा इव ।

---

(अ) प्रेमरसे चित्तद्रवरूपविशिष्टाया रतेर्व्बोधादस्य व्यापकत्वं शृङ्गाररसात् यथाकथञ्चिदपि बुद्धात् साधारण्यात् रतिभावमयादस्यमिति केचित्—अपरेस्तु तेनैव मार्गेण प्रेमरसस्य व्याप्तिरधिकेत्यनुमीयते । (If the connotation decreases, the denotation increases and *vice versa.*) तन्मते प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति । वस्तुतस्तु यत्किञ्चिदपि पार्थक्यमुपकल्प्यैतावान् विभागविस्तारः । ग्रन्थेऽत्र प्राक् सप्तविधगौणरतीनां वीरादारभ्य रौद्रं यावद्दर्शितानामुपन्यासः, पश्चात् शान्त-वात्सल्य-प्रेयो-भक्ति-प्रीतीनां पञ्चानां मुख्यरतीनां पृथङ्निर्देशः स्वसम्प्रदायमततात्पर्य्यलक्षणाय ; ग्रन्थकृत्त्वितरालङ्कारिका इव नवैव रसा इति स्वमतं सूचितवान्—'स्वेच्छया लिखितं किञ्चित् किञ्चिदत्र परेच्छया । यत् पूर्व्वापरसंबद्धं तत् पूर्व्वमपरं परम् ॥'—अग्रे श्रीकृष्णस्य सर्व्वरसात्मकत्वं सूचयितुं रचितः श्लोकोऽपि तदाशयक एव । महीयानेव प्रपञ्चः—मधुरोपनामकस्य भक्तिरसस्यैव महत्प्रपञ्चस्त्वं श्रीमद्रूपगोस्वामिनां ग्रन्थे—ग्रन्थावसाने सविनयमुक्तिश्च—'अतलत्वादपारत्वादाप्तोऽसौ दुर्व्विगाहताम् । स्पृष्टः परं तटस्थेन रसाब्धिर्मधुरो मया ॥' इति ।

(ब) 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय'मितिवत् प्रेमरसस्याखण्डत्वमितरेषां खण्डरसताऽंशांशिनः सूचिता । प्रेमरसे हि भूमस्वरूपस्य भगवतः शक्तिर्निहिता—यदि शृङ्गाररसत इतरेषां रसानां विपरिणामः सुकरः, कथं न तत्सारभूतात् प्रेम्ण एतत्सम्भवः ? अतो नात्र केवलं प्रौढ़िः । मानवहृदये वेरं तथाऽस्तु, घृणा वाऽस्तु, सर्व्वमेव प्रेमप्रकर्षेण्लं, प्रेम्णि निलीने हृदये सर्व्वेषां साधीयान् लय इति नासाधारणसंवेद्यं तत्त्वम् । प्रेम्णो वारिधित्वं कथञ्चिदुदाहरणद्वाराऽनुमीयते—वेणुवकुलपरीक्षणयदेवसुहृद्गुमापतिधरस्याधोदर्शितः श्लोको रसस्यैकस्यानेकत्वं निपुणमनुमापयतीत्यस्माकं प्रतिभानम्—'रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकाया रुक्मिण्याऽपि प्रबलपुलकोद्भेदमा-

---

(13) 'धन्यवीरवत्तया दिङ्मात्र'मिति मुद्रितपुस्तके, 'धन्यवीरवाद्दिङ्मात्र'मिति (क) (ख) पुस्तकयोः, 'धन्यवीरवमयादि'त्यादि (ग) (घ) (च) पुस्तकेषु ।

अथ भक्तिरसः—

जय श्रीमद्वृन्दावनमदन ! नन्दात्मज ! विभो !
प्रियाभीरीवृन्दारक ! निखिलवृन्दारकमणे !!
चिदानन्दस्यन्दाधिकपदारविन्दासव ! नमो
नमस्ते गोविन्दाखिलभुवनकन्दाय महते (ख) ॥ १२

अत्र देवविषयत्वाच्चेतोरञ्जकता रतिरेव भावः—स एव स्थायी, आलम्बनं श्रीकृष्णः, उद्दीपनन्तन्महिमादि, अनुभावो हृदयद्रवादिः, व्यभिचारी निर्व्वेददैन्यादिः, परोक्षो भक्तानां, सामाजिकानान्तु प्रत्यक्षः ।

यद्यपि भगवान् सर्व्वरसकदम्बसम्वलितः, तथापि मूर्त्तः शृङ्गार एव, सावर्ण्यात् तद्दैवतत्वाच्च (ग) । तथाहि—

जयेति—प्रियाऽभीरीस्वरूपा वृन्दारिका देवाङ्गना यस्य, हे तथाविध ! 'तत्प्रियार्थं सम्भवन्त्वमरस्त्रियः' इति दशमोक्तेः । हे निखिलवृन्दारकाणां देवानां मध्ये श्रेष्ठ ! चिदानन्दस्य ब्रह्मानन्दस्य स्यन्दः क्षरणं यदि सम्भवति तदा तस्योऽप्यधिकश्चरणारविन्दस्यासवो यस्तो रूपमकरन्दो यस्य, हे तथाभूत !

सावर्ण्यादिति—श्रीकृष्णस्य यो वर्णः स एव वर्णः शृङ्गाररसस्य—एतेन रसानां साकारत्वमभिप्रेतं, तथा च ह्लादिनीशक्तेर्मूर्त्तिरूपा लक्ष्मीप्रभृतयो यथा साकारास्तथा ह्लादिनीशक्तेर्मूर्त्तिरूपा एते रसा अपि साकारा एवेति भावः ।

---

लिङ्गितस्य । विश्वं प्राप्य प्रस्त्रवणयमुनातीरवानीरकुञ्जे राधाकेलीभरपरिमलध्यानमूर्च्छा मुरारेः ॥' अत्र प्रेमा सम्भोगशृङ्गारोपचितो भक्तिरसस्य प्राप्तिरसस्य च पुष्टिं साधयति—औत्सुक्यस्मृतिमतिहर्षाऽसूयाचिन्तानिर्व्वेदानां बहूनां भावानामाश्रयाविरोधेन मधुर-मधुरमुत्पन्नगरिमवतश्च सहृदयहृदयसंवेद्यम् ।

(ख) उच्यते पश्चो दृष्टदेवविषयिणी चेतोरञ्जकता स्तिमितस्तिमितैव विषयान्तर-चिन्तया न व्याकुला—सा भक्तहृदयभावविभावानां परां काष्ठामधिरोहति विभौ गोविन्दे प्रयुक्ता, विशेषतश्च कृष्ण परिपालितलास्यरागप्रगल्भावम् । एवमेव श्रीकृष्णचेतन्यचरितस्येव कोऽपि विशेषोऽभिहितः । श्लोके—'पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्त्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम् ॥' 'त्वदेकं भजामस्त्वदेकं स्मरामस्त्वदेकं जगत्साक्षिरूपं नमामः' 'नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्व्वत एव सर्व्व' इत्यादिषु तत्रैव भक्तिरसस्य प्रस्रवत्यनुभावेन वर्त्तनम् । 'सा पराऽनुरक्तिरीश्वरे' इति भक्तिसूत्रसूचितसंज्ञस्य भावस्यैतेषु स्फुटु प्रकाशः ।

(ग) भगवान् हि पुञ्जीभूतं प्रेम (God is Love) । एषैव वैष्णवचिन्ताप्रवाहस्य

प्रियायाः स्वानन्दप्रतिहतधियः, किन्त्वपघनो
घनोत्कृष्णं कृष्णं प्रति समतनोत्तर्जनमिव ॥ १४

यथा वा—

मृदुस्पन्दं लीलाकरकिसलयोत्कम्पमुदयत्-
प्रसूनेषुक्रीडाविभ्रममुदितालिव्रजसुखम् ।
अमन्दीकुर्व्वाणद्विमपि कलकण्ठध्वनिकलां
सिषेवे राधाङ्गं हरिरथ वसन्तानिलमिव ॥ १५

चित्तस्य क्षणमात्रनिर्वृतिकृते तस्या मुखं चिन्तितं
सद्यः पद्ममभूत्ततः परमहो पूर्णेन्दुरक्ष्णोर्जितः (14) ।
आनन्दामृतमण्डलम्पुनरभूद्विक्ष्मां ततोऽभूद्विष-
स्तत्पश्चाद्यभूत्तदत सखे ! मत्संविदो गोचरः ॥ १६

अर्थादानन्दमूर्च्छिताया राधाया अपघनो देह एव सम्भोगे घनोत्कृष्णां कृष्णां निवारयितु-मर्ज्जनमिव समतनोत्, तस्यास्तर्ज्जनेऽसामर्थ्येऽपि तत्परिणमरूपो देह एव श्रीकृष्णं ततर्ज्जेत्युत्प्रेक्षा । वस्तुतस्तु साऽनन्दवैवश्येन वाक्यादिकमपि कर्त्तुं न प्रशशाकेत्युत्प्रेक्षा-ऽलङ्कारगम्यो वस्तुध्वनिः । तर्जनमेवाह—श्रीकृष्णेन तस्याः पाणिद्वन्द्वे धृते सति रत्न-वलयैर्झटिति भणितं, तथा च रत्नवलयानाञ्झङ्कारशब्देनैव तत्स्वरूपो देहः श्रीकृष्णन्ततर्ज्ज ।

यथा वेति—हरी राधाया अङ्गं सिषेवे—यथा 'महाप्रसादान्नं सिषेवे' इत्युक्ते महा-प्रसादस्य भोजनमेव सेवेति बुध्यते, तथैवात्राप्यङ्गस्य सम्भोग एव सेवेति ज्ञेयम् । अङ्गं कीदृशम् ? वसन्तकालस्यानिलमिव । साधर्म्यमाह—तत्सम्भोगसमये मृदुस्पन्दं, वसन्तानिलमपि मृदुस्पन्दं, निवारणलीलया करकिसलयस्योत्कम्पो यत्र, अनिलपक्षे लीलाकरः कौतुककरः किसलयस्य नवीनपल्लवस्योत्कम्पो यत्र, उदयन्ती प्रसूनेषोः कन्दर्पस्य या क्रीडा तया विभ्रमम्, उदितमालीव्रजानां सखीसमूहानां सुखं यत्र, पक्षेऽलिव्रजानां भ्रमरसमूहानाम् । कलो मधुरास्फुटो 'न नेति कण्ठध्वनिस्तस्य कलां वैदग्धीं किमप्य-निर्व्वचनीयं यथास्यात्तथाऽमन्दीकुर्व्वाणं सर्व्वोत्कृष्टं कुर्व्वाणं, पक्षे कलकण्ठः कोकिलः । ।

श्रीराधाविरहेण व्याकुलः श्रीकृष्णः सुबलं प्रत्याह—चित्तस्येति । पद्ममभूदिति—पद्मदर्शनजन्यसुखसदृशसुखजनकत्वेन तच्चिन्तितं पद्ममभूदित्यर्थः । पश्चात्तच्चिन्तनदर्शनेन जाता या तस्याः साक्षाद्दर्शनमहोत्कण्ठा तया तच्चिन्तं विषवद्दाहकत्वेन विषमभूत् । तदनन्तरं यदभूत्तन्मम संविदो ज्ञानस्य गोचरो न भवति—तथा च विरहपीड़या मूर्च्छा जातेति भावः ।

---

(14) 'परमहो पूर्णः सुधादीधिति'रिति (ख) (ग) पुस्तकयोः पाठः ।

भूतविरहेऽपि सह प्रवासावान्तरभेदो यथोदाहरणं स्फुटीभविष्यति।

यथोभयोरेव सम्भोगविप्रलम्भयोः परस्परावलोकनाधरपानाद्यभिलाषा-दीनां क्रमेणोदाहरणानि।

तत्र परस्परावलोकनं यथा—

एहीति पृष्ठगसखीचयकैतवेन
व्याहृत्य यो मयि तया निहितः कटाक्षः।
प्रत्यक्षवन्मम कटाक्षमवाप्य शान्तो-
ऽप्यन्तर्बिभेद स निखातशरार्धवन्मे॥ १८

अपि च—

तस्याः सखीभिरपि वीक्ष्य सुजातमन्त-
र्भावोदयं कमपि चञ्चललोचनान्तैः।
धन्यो भवानिति कृता मम सम्मुखीभि-
रिन्दीवरच्छदमयी (16) मयि पुष्पवृष्टिः॥ १९

परस्पराधरपानं यथा—

पाअन्दि पिअदि चाससं पेअसि ललिदे कहिं पीति।
सान्द्रानन्दविनिद्रितराधास्वप्नायितञ्जयति (ह) (17)॥ २०

यथोदाहरणमिति—उदाहरणे इत्यर्थः।

एहीति—पृष्ठस्थितसखीदर्शनमिषेण मयि निहितो यः कटाक्षः स प्रत्यक्षमन्मतुकटाक्षं प्राप्य शान्तोऽपि ममान्तःकरणं बिभेद। अत्र दृष्टान्तमाह—निखातेति। प्रकाशस्थित-शरस्य वेधे तथा पीड़ा न जायते यथा कणच्छिन्नो योऽर्द्धशरस्तस्य वेध इत्यर्थः। इदन्तु साङ्ग्रामिकाणामनुभवसिद्धमेव। कमपि सखायमुद्दिश्य श्रीकृष्णस्योक्तिरियमिति बोध्यम्।

यथा तस्याः कटाक्षशरेणाहं विद्धस्तथा मत्कटाक्षशरेणापि विद्धायास्तस्याः कमप्यन्तर्भावोदयं वीक्ष्य तस्याः सखीभिरपि धन्यो भवानित्यर्थबोधकैस्तत एव मदाभिमुख-परैस्ताभिश्चञ्चललोचनान्तैः करणैर्मयि नीलकमलदलमयी पुष्पवृष्टिः कृता।

---

(ह) अत्रैवोदाहरणे गौणसम्भोगशृङ्गारस्य सूचनम्। न केवलं पद्येऽस्मिन्नीर्ष्यादिप्राकृत-जनसुलभस्य भावप्रपञ्चस्याच्छादनं, प्रकृत भक्तहृदये भगवत्सङ्गसुखानन्दवार्त्तोद्बोधनं,

---

(16) 'इन्दीवरच्छविमयी'ति (ख) (ग) पुस्तकयोः पाठः। स च टीकाकृद्व्याख्यानादुपेक्ष्यः।

(17) 'सान्द्राणन्दविणिद्दिदराधासप्णाअदे' जअदि' इति मुद्रितपुस्तक एव प्राकृतभाषामयः पाठः। स चानर्थक एव—टीकाकृत टिप्पण्यामप्येष्टव्यः।

यथा वा—

अर्द्धोन्मीलितानिमेषनयनं निष्पन्दतारं कियद्-
दीर्घश्वासमलक्ष्यकण्ठनिनदं सानन्दतन्द्रायिता ।
कृष्णे पाययति स्वकीयमधरं प्रागेव पीताधरे
किञ्चित्त्वं ललिते ! पिबेति किमपि स्वप्नायते राधिका ॥ २१

परस्परचुम्बनं यथा—

अङ्गाङ्गि स्खलनं कराकरि मनःसंवादसंवेदनं
कर्णाकर्णि कथाकथासु युगपच्चुम्बाः शतं गण्डयोः ।
स्कन्धास्कन्धि भुजौ मुखामुखि मुहुर्माध्वीकपानक्रमो
राधामाधवयोर्मधौ मधुमदक्रीड़ा जरीजृम्भते ॥ २२

राधायाः स्वप्नायितं जयति । निद्रादशायामसङ्गतसङ्गतनानार्थबोधकशब्दोच्चारण-मेव स्वप्नायितं, तदेवाह । हे ललिते ! प्रेयसि ! श्रीकृष्णे स्वीयास्यं मां पाययति सति ममास्यं स्वयं पिबति सति त्वं क्व गताऽसीति स्वप्नायितम् ।

अर्द्धेति—प्राक् प्रथमं पीतो मदीयाधरो येन तथाभूते श्रीकृष्णे स्वकीयाधरं मां पाययति सति हे ललिते ! त्वमपि किञ्चित् पिबेति किमपि स्वप्नायते राधिका । स्वप्नायत इत्यत्र क्रियाविशेषणान्याह—नेत्रार्द्धं व्याप्योन्मीलिते ईषन्मुद्रिते एवं निमेषरहिते नयने यत्र तद्यथा स्यात्तथा, स्पन्दरहिता नेत्रतारा यत्र स्यात्, कियन्तो दीर्घश्वासा यत्र, अलक्ष्योऽस्फुटः कण्ठनिनदो यत्र ।

मधौ वसन्ते राधामाधवयोर्वसन्तकालीनमदेन जाता या क्रीड़ा सा जरीजृम्भते अतिशयेन प्रकाशते । क्रीड़ामेवाह—तयोः स्खलनमङ्गाङ्गि अङ्गेनाङ्गेन निर्वृत्तं, तथा च मधुमदेन राधाया अङ्गे श्रीकृष्णः पतति, श्रीकृष्णस्याङ्गे राधा पततीत्यर्थः । मनसः संवादोऽभिप्रायस्तस्य संवेदनं ज्ञानं कराकरि कराभ्यां कराभ्यां निर्वृत्तं, तथा च श्रीकृष्णस्य हस्तोद्गमादेव तस्य मनोऽभिप्रायो राधिकया ज्ञातः, एवं राधाया अपीति ज्ञेयम् । कर्णाभ्यां कर्णाभ्यां निर्वृत्तासु कथाकथासु सतीषु परस्परगण्डयोः शतसंख्यकचुम्बनम् । भुजौ स्कन्धास्कन्धि—तथा च तयोर्भुजौ परस्परस्कन्धे निक्षिप्तावित्यर्थः । मधुपानक्रमो मुखामुखि मुखेन मुखेन निर्वृत्तः ।

---

तदुपचितानन्दस्य भागाहरणायान्यथाऽन्यदा च कथितानां प्रतिबन्धिभक्तत्वेन चैतरेषां प्रावण्यमपि मधुरमधुरमाकाशम् । अत्रार्थस्या द्वितीयार्द्धेऽन्योक्तिरूपकवाक्यनिर्मितिः संस्कृतेनैव भवितुमर्हा । टीकाकृत्कृतप्राकृतछन्दभेदतच्छायाऽपि नात्र प्रचरतीति निश्चित-मवधातम् ।

